संस्कृतभाषाप्रचारिण्याः ग्रन्थमालायाः एकादशं कुसुमम्

कालिदासविरचिते

# रघुवंशे

## द्वादशः सर्गः

व्याख्याता

श्री आ. वरदराजन् (शिरोमणिः)

23



चतुर्थावृत्तिः 2000

प्रकाशिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आं. प्र)

1991



[मूल्यम् 3-00

संस्कृतभाषाप्रचारिण्याः ग्रन्थमालायाः एकादशं कुसुमम्

कालिदासविरचिते

# रघुवंशे

## द्वादशः सर्गः

व्याख्याता

श्री आ. वरदराजन् (शिरोमणिः)



चतुर्थावृत्तिः 2000

प्रकाशिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आ. प्र)

1991

 [मूल्यम् 3-00

# निवेदनम्

अयि भो सहृदयप्रवराः!

सुविदितमेवेदं भवतां यदियं सभा यथाशक्ति यथावकाशं सुसंविधानेन संस्कृतवाणीसेवामाचरतीति तत्प्रणाल्यां च प्राचीनकाव्यानि सुलभविवृतिभिः समलङ्कृत्य प्रकाशयति, नवीनपाठ्यग्रन्थांश्च नव्यपद्धत्या रचयित्वा प्रकटयतीति च । कृतज्ञतार्हा भवन्तः येषां प्रोत्साहेन सभाः प्रकाशितानि पुस्तकानि बहुवारं पुनर्मुद्रणमाप्नुवन्ति इतरप्रकाशनाय च साहाय्यमादधति ।

इदं च एकादशं कुसुमं चतुर्थावृत्तं भवतां करकमलयोस्समर्प्यमाणं सामोदमादृतं भवेदिति विश्वसिमि। श्री आ. वरदराजन् महाशया धन्यवादार्हा यदीयकृतिरियमुपकृतिरूपा संवर्धयति सभाप्रभावं यदीयाः बह्वचः रचनाः सादरं समर्पिताः समर्पयिष्यन्ते च सभायै ।

इयं निवेद्यते सहृदयेषु पण्डितवर्येषु यद् सभाप्रकाशितानि पुस्तकानि तत्तत्पाठशालासु पाठ्यतया उपयुज्य गीर्वाणवाणीसेवायां अस्मान् इतोऽधिकोत्साहान् कुर्वन्तु इति ।

इति

के. रामकृष्णमाचार्यः

प्रकाशनाधिकारी

॥ श्रीरस्तु ॥

श्री हयवदनपरब्रह्मणे नमः

# रघुवंशमहाकाव्ये

## (द्वादशस्सर्गः)

निर्विष्टविषयस्नेहः स दशान्तमुपेयिवान् ।
आसीदासन्ननिर्वाणः प्रदीपार्चिरिवोषसि ॥ १ ॥

अर्थः – निर्विष्टविषयस्नेहः = विषयोपभोगान् उपभुक्तवान्, सः-दशरथः, दशान्तं-जीवनावस्थायाः अन्तिमं भागं वार्धकं, उपेयिवान्-प्राप्तवान्, उषसि - प्रभातसमये, प्रदीपार्चिरिव=दीपज्वालेव, आसन्ननिर्वाणः - आसन्नमोक्षकालः, आसीत् - अभवत् ।

भावः – दशरथः नानाविधान् विषयोपभोगाननुभूय वार्धके निर्वाणोन्मुखदीपज्वालेव प्रशान्तिकाम आसीत् ।

☆ तं कर्णमूलमागत्य रामे श्रीर्न्यस्यतामिति ।
कैकेयीशङ्कयेवाह पलितच्छद्मना जरा ॥ ॥ २ ॥

अर्थः – जरा - वार्धक्यावस्था, कैकेयीशङ्कयेव - कैकेयीं आशंकयेव, पलितच्छद्मना - शुक्लकेशव्याजेन, कर्णमूलमागत्य - कर्णसमीपं प्राप्य, रामे=रामभद्रे, श्रीः = राज्जलक्ष्मीः, न्यस्यतां=निधीयतां, इति=एवं, तं- दशरथं, आह इव - उवाचेव ।

भाव: – वृद्धावस्था शुक्लकेशव्याजेन कैकेयीशङ्कया दशरथस्य कर्णान्तिकं उपेत्य रामे राज्यं निधीयतामिति रहस्यमुवाचेव। अर्थात् वृद्धो दशरथ: रामस्य यौवराज्याभिषेकाय अचिन्तयदिति भाव:।

सा पौरान्पौरकान्तस्य रामस्याऽभ्युदयश्रुति:।
प्रत्येकं ह्लादयाञ्चक्रे कुल्येवोद्यानपादपान् ॥ ३ ॥

अर्थ: – सा=प्रसिद्धा, पौरकान्तस्य = पौराणामभिमतस्य, रामस्य, अभ्युदयश्रुति: = अभिषेकवार्ता, कुल्या = कृत्रिमा सरित्, उद्यानपादपानिव = उद्यानवने स्थितान् वृक्षानिव, पौरान्, प्रत्येकं, ह्लादयाञ्चक्रे = संतोषयामास।

भाव: – दशरथस्य वृद्धत्वाद्धेतो: रामस्य अभिषेकप्रस्ताव: कुल्या वृक्षान् यथा सन्तोषयति तथा पौरान् सर्वान् सन्तोषयामास।

तस्याभिषेकसंभारं कल्पितं क्रूरनिश्चया।
दूषयामास कैकेयी शोकोष्णै: पार्थिवाश्रुभि: ॥ ४ ॥

अर्थ:– क्रूरनिश्चया कैकेयी, तस्य=रामस्य, कल्पितं= सम्पादितं, अभिषेकसंभारं = अभिषेकस्य उपकरणं, शोकोष्णै: = शोकेन उष्णै:, पार्थिवाश्रुभि: = पार्थिवस्य दशरथस्य शोकबाष्पै:, दूषयामास = अपवित्रमकरोत्।

भाव: – क्रूरमति: कैकेयी रामस्य अभिषेकार्थं सम्भृतान्युपकरणानि वरद्वययाचनेन राज्ञ: शोकमुत्पाद्य तदश्रुभिर्दूषितान्यकरोत्।

★ सा किलाश्वासिता चण्डी भर्त्रा तत्संश्रुतौ वरौ ।
उद्ववामेन्द्रसिक्ता भूर्बिलमग्नाविवोरगौ ॥ ५ ॥

अर्थः – चण्डी – अतिकोपना, सा कैकेयी किल, भर्त्रा= दशरथेन, आश्वासिता-अनुनीता सती, तत्संश्रुतौ= तेन प्रतिज्ञातौ वरौ, इन्द्रसिक्ता-इन्द्रेण अभिवृष्टा, भूः = भूमिः, बिले-वल्मीकादौ, मग्नौ – लीनौ, उरगौ इव = सर्पौ इव, उद्ववाम = उज्जगार ।

भावः – पूर्वं दत्तवरा कैकेयी कोपगृहे भर्त्रा अनुनीयमाना सती, वर्षाभिषिक्ता भूः बिलमुखेन अन्तर्लीनौ उरगाविव द्वौ वरौ रामवनवास-भरताभिषेकरूपौ बहिः प्रकाशितवती ।

तयोश्चतुर्दशैकेन रामं प्राव्राजयत्समाः ।
द्वितीयेन सुतस्यैच्छद्वैधव्यैकफलां श्रियम् ॥ ६ ॥

अर्थः – सा कैकेयी, तयोः – तयोर्वरयोर्मध्ये, एकेन= एकेन वरेण, रामं, चतुर्दश, समाः–संवत्सरान्, प्रावासयत्, द्वितीयेन वरेण, सुतस्य–भरतस्य, वैधव्यैकफलां–स्ववैधव्य मात्रफलां, श्रियं = राज्यलक्ष्मीं, ऐच्छत् – इयेष ।

भावः – कैकेयी रामस्य वनवासं भरतस्य राज्याभिषेकम् च कांक्षन्ती स्ववैधव्यमेव इच्छति स्म ।

★ पित्रा दत्तां रुदन् रामः प्राङ् महीं प्रत्यपद्यत ।
पश्चाद्वनाय गच्छेति तदाज्ञां मुदितोऽग्रहीत् ॥ ७ ॥

अर्थः – रामः, प्राक्–पूर्वं, पित्रा = जनकेन, दत्तां = अर्पितां, महीं – राज्यं, रुदन् – दुःखितः सन्, प्रत्यपद्यत– अङ्गीचकार, पश्चात्=अनन्तरं, वनाय गच्छेति, तदाज्ञां – पित्राज्ञां, मुदितस्सन्=संतुष्टः सन्, अग्रहीत्–अङ्गीचकार ।

भावः – दशरथेन रामाय राज्यप्रदानप्रस्तावे कृते रामस्य मनः खिन्नमासीत् । तदनन्तरं वनवासप्रसंगे पुनः तस्य मनःप्रसन्नमभूत् । धर्मात्मनो रामस्य राज्यपालना- पेक्षया पित्राज्ञापालने एव अभिनिवेश इति व्यज्यते ।

☆ दधतो मंगलक्षौमे वसानस्य च वल्कले ।
ददृशुर्विस्मितास्तस्य मुखरागं समं जनाः ॥ ८ ॥

अर्थः – मङ्गलक्षौमे = अभिषेकमङ्गलाय सम्भृते दुकूले, दधतः–धरतः, वल्कले = वनवासाय उद्दिष्टे वल्कले च, वसानस्य–आच्छादयतः, तस्य=रामस्य, समं–एकविधं, मुखरागं – मुखवर्णं, जनाः, विस्मिताः – आश्चर्ययुक्ताः सन्तः, ददृशुः ।

भावः – राज्याभिषेके वनवासे च प्रस्तुते रामस्य मनो न विकारं प्राप । विकारहेतौ सत्यपि सुखदुःखयोः समबुद्धेः तस्य मनः न चचाल । रामो वीर एव न, अपितु धीरश्चेति भावः ।

☆ स सीतालक्ष्मणसखः सत्याद्गुरुमलोपयन् ।
विवेश दण्डकारण्यं प्रत्येकं च सतां मनः ॥ ९ ॥

अर्थः – स रामः, गुरुं-पितरं, सत्यात् – वरदान-रूपात् सत्यवचनात्, अलोपयन् – अभ्रंशयन्, सीतालक्ष्मण-सखः = सीतालक्ष्मणाभ्यां सहितः सन्, दण्डकारण्यं, विवेश-प्राविशत्, सतां मनश्च प्रत्येकं विवेश ।

भावः – रामः पितुस्सत्यवाक्यपरिपालनाय सीतया लक्ष्मणेन च सह दण्डकारण्यं प्रविवेश, तदा सतां मनश्च एकैकं विवेश । पित्राज्ञापालनेन सर्वे सन्तः सन्तुष्टा इति भावः ।

राजाऽपि तद्वियोगार्तः स्मृत्वा शापं स्वकर्मजम् ।
शरीरत्यागमात्रेण शुद्धिलाभममन्यत ।। १० ।।

अर्थः – तद्वियोगार्तः=पुत्रवियोगदुःखितः, राजाऽपि, स्वकर्मजं-मुनिपुत्रवधरूपेण स्वकर्मणा जातं, शापं-पुत्र-शोकजमरणात्मकं, स्मृत्वा, शरीरत्यागमात्रेण=देहत्यागे-नैव, शुद्धिलाभं-प्रायश्चित्तं, अमन्यत ।

भावः – पुत्रवियोगदुःखितो दशरथः पूर्वं मुनिकुमार-वधप्राप्तं शापं पुत्रशोकेन मरणं अन्वभूत् ।

☆ पूर्वगाथा – पूर्वं कदाचित् दशरथः मृगयाखेलनाय वनं गतः । तत्र मुनिकुमारः कश्चित् अन्धयोः पिपासा-पीडितयोः मातापित्रोः कृते जलाहरणाय आगत्य समीपस्थे जलाशये घटं वारिणा पूरयन्नास्त । तच्छब्दं श्रुत्वा राजा गजः कोऽपि जलं पिबन्नास्ते इति मत्वा शब्दभेदिनं बाणं

प्रायुङ्क्त । तेन स मुनिकुमारो हतः । विदितवृत्तान्ताभ्यां वृद्धमुनिदम्पतिभ्यां तस्मै पुत्रशोकेनैव ते मरणं भवेदिति शापो दत्तः ।

विप्रोषितकुमारं तद्राज्यमस्तमितेश्वरम् ।
रन्ध्रान्वेषणदक्षाणां द्विषामामिषतां ययौ ॥ ११ ॥

अर्थः – विप्रोषितकुमारं = निर्गतकुमारं, अस्तमितेश्वरम् = मृताधिपतिं, तद्राज्यं = अयोध्याराज्यं, रन्ध्रान्वेषणदक्षाणां= अवकाशकाङ्क्षिणां, द्विषां – शत्रूणां, आमिषतां–भोग्यवस्तुतां, ययौ – प्राप ।

भावः – निर्गते कुमारे, दिवंगते च दशरथे, अयोध्याराज्यं छिद्रेषु स्वकार्यं सम्पादयितुं प्रवर्तमानानां शत्रूणां भोग्यवस्तु बभूव ।

अथाऽनाथाः प्रकृतयो मातृबन्धुनिवासिनम् ।
मौलैरानाययामासुर्भरतं स्तम्भिताश्रुभिः ॥ १२ ॥

अर्थः – अथ अनाथाः, प्रकृतयः – अमात्याः, मातृबन्धुनिवासिनं–मातुलगृहे वसन्तं, भरतं, स्तम्भिताश्रुभिः= निरुद्धाश्रुभिः, मौलैः – आप्तैः सचिवैः, आनाययामासुः = आगमयाञ्चक्रुः ।

भावः – अमात्याः आप्तैः सचिवैः मातुलकुलात् भरतं आगमयामासुः ।,

☆ श्रुत्वा तथाविधं मृत्युं कैकेयीतनयः पितुः ।
मातुर्न केवलं स्वस्याः श्रियोऽप्यासीत्पराङ्मुखः ॥ १३ ॥

अर्थः – कैकेयीतनयः=भरतः, पितुः = स्वजनकस्य, तथाविधं = स्वमातृमूलं, मृत्युं, श्रुत्वा – आकर्ण्य, केवलं स्वस्याः मातुः न, किंतु श्रियोऽपि, पराङ्मुखः = विमुखः, आसीत् ।

भावः – भरतः पितुर्मरणं मातृमूलं ज्ञात्वा न तस्या एव विमुखोऽभवत्, अपि तु प्राप्तराज्यस्यापि विमुखोऽभवत् ।

ससैन्यश्चान्वगाद्रामं दर्शितानाश्रमालयैः ।
तस्य पश्यन् ससौमित्रेरुदश्रूर्वसतिद्रुमान् ॥ १४ ॥

अर्थः– ससैन्यो–भरतः आश्रमालयैः–वनवासिभिः, दर्शितान्, ससौमित्रेः–लक्ष्मणसहितस्य, तस्य – रामस्य, वसतिद्रुमान्=निवासवृक्षान्, पश्यन्, उदश्रुः–रुदन्, रामं, अन्वगात् = उपागच्छत् ।

भावः – भरतः सैन्यसमेतस्सन् आश्रमवासिभिः दर्शितान् तांस्तान् प्रदेशान् सीतारामलक्ष्मणैरध्युषितान् पश्यन् बाष्पावद्धदृष्टिः राममानेतुं अगच्छत् ।

चित्रकूटवनस्थं च कथितस्वर्गतिर्गुरोः ।
लक्ष्म्या निमन्त्रयाञ्चक्रे त मनुच्छिष्टसम्पदा ॥ १५ ॥

अर्थः – चित्रकूटवनस्थं तं रामं, गुरोः – पितुः, कथितस्वर्गतिः = कथितमरणवृत्तान्तस्सन्, अनुच्छिष्टसम्पदा – अननुभूतगुणोत्कर्षया, लक्ष्म्या – राज्यश्रिया, निमन्त्रयाञ्चक्रे – आजुहाव ।

भावः – भरतः चित्रकूटे वसन्तं रामं प्रति पितुर्दशरथस्य स्वर्गवासवृत्तान्तं कथयित्वा तं राज्यभारं वोढुं आहूतवान् ।

★ स हि प्रथमजे तस्मिन्नकृतश्रीपरिग्रहे ।
परिवेत्तारमात्मानं मेने स्वीकरणाद्भुवः ॥ १६ ॥

अर्थः – सः-भरतः, प्रथमजे=अग्रजे, तस्मिन्-रामे, अकृतश्रीपरिग्रहे - राज्यस्वीकारं न कुर्वति सति, भुवः स्वीकरणात् - राज्यस्वीकारात्, आत्मानं, परिवेत्तारं - ज्येष्ठे अनूढे दारपरिग्रहकर्तारं, मेने - अमन्यत ।

भावः ज्येष्ठे भ्रातरि अकृतविवाहे सति यः परिणयति स परिवेत्तेति कथ्यते । यदि रामः राज्यं न स्वीकरोति तर्हि स्वयं राज्यं गृह्णन् परिवेत्तेव निन्द्येत सद्भिरिति भरतः अशङ्कत ।

★ तमशक्यमपाक्रष्टुं निदेशात्स्वर्गिणः पितुः ।
ययाचे पादुके पश्चात्कर्तुं राज्याधिदेवते ॥ २७ ॥

अर्थः – स्वर्गिणः= परलोकगतस्य, पितुः, निदेशात्-शासनात्, अपाक्रष्टुं - निवर्तयितुं, अशक्यं, तं रामं, पश्चात्,अधिदेवते राज्यस्य स्वामिन्यौ, कर्तुं, पादुके ययाचे।

भावः – पितुः निदेशे वर्तमानं रामं आनेतुमक्षमः भरतः राज्यपालनाय तत्पादुके याचितवान् ।

★ स विसृष्टस्तथेत्युक्त्वा भ्रात्रा नैवाऽविशत्पुरीम् ।
नन्दिग्राममगतस्तस्य राज्यं न्यासमिवाऽभुनक् ॥ १८ ॥

अर्थः – स भरतः, भ्रात्रा = रामेण, तथेत्युक्त्वा, विसृष्टः सन् = संप्रेषितस्सन्, पुरीं = अयोध्यां, न अविशदेव = नैव प्रविष्टवान्, किंतु, नन्दिग्रामगतः सन्, तस्य-रामस्य, राज्यं, न्यासमिव - निक्षेपमिव, अभुनक् = अपालयत् ।

भावः – पादुकाप्रदानान्तरं, स भरतः नन्दिग्रामे वसन् रामस्य राज्यं प्रत्यर्पणाय निक्षेपमिव अपालयत् ।

★ दृढभक्तिरिति ज्येष्ठे राज्यतृष्णापराङ्मुखः ।
मातुः पापस्य भरतः प्रायश्चित्तमिवाकरोत् ।। १९ ।।

अर्थः – ज्येष्ठे=रामे, दृढभक्तिः, भरतः, राज्य-तृष्णापराङ्मुखः = राज्यकाङ्क्षाविमुखः, इति = इत्थं, मातुः - कैकेय्याः, पापस्य, प्रायश्चित्तं = अपनोदकं कर्म, अकरोदिव - स्वयं कृतवानिव ।

भावः – ज्येष्ठभ्रातरि श्रीरामे दृढभक्तिः भरतः राज्यलोभं विहाय मात्रा कैकेय्या कृतस्य पापस्य स्वयं प्रायश्चित्तं कुर्वन्निव नन्दिग्रामे वसन् निर्मलभावेन राज्यं कुर्वन् कालं निनाय ।

★ रामोऽपि सह वैदेह्या वने वन्येन वर्तयन् ।
चचार सानुजः शान्तो वृद्धेक्ष्वाकुव्रतं युवा ।। २०।।

अर्थः–सानुजः = लक्ष्मणेन सहितः, शान्तः रामोऽपि, वैदेह्या सह - सीतया सह, वने, वन्येन - वनभवेन कन्द-मूलादिना, वर्तयन्=वृत्तिं कुर्वन्, वृद्धेक्ष्वाकुव्रतं=इक्ष्वाकु-

वंशजानां वृद्धानां व्रतं वनवासात्मकं, युवा-यौवनस्थ एव, चचार-अन्वतिष्ठत् ।

भावः – यौवने विषयैषिदशायामेव रामः लक्ष्मणेन सीतया च सह वन्यैः कन्दमूलादिभिः जीविकां गमयन् इक्ष्वाकुवंशसंजातैः वार्धके अनुष्ठीयमानां मुनिवृत्तिमाचरत् ।

प्रभावस्तम्भितच्छायमाश्रितः स वनस्पतिम् ।
कदाचिदङ्के सीतायाः शिश्ये किंचिदिव श्रमात् ॥ २१ ॥

अर्थः – स रामः, कदाचित्, प्रभावस्तम्भितच्छायं-स्वमहिम्ना स्थिरीकृतच्छायं, वनस्पतिं-वृक्षं, आश्रितस्सन्, किञ्चित् - ईषत्, श्रमादिव, सीतायाः, अङ्के - ऊरौ, शिश्ये - सुष्वाप ।

भावः – रामः कदाचित् वने विचरन् श्रान्तस्सन् वृक्षस्य च्छायायां सीताया अङ्के शिरो निधाय सुप्तवान् ।

ऐन्द्रिः किल नखैस्तस्या विददार स्तनौ द्विजः ।
प्रियोपभोगचिह्नेषु पौरोभाग्यमिवाचरन् ॥ २२ ॥

अर्थः – ऐन्द्रिः-इन्द्रस्य पुत्रः, द्विजः = पक्षी, काकः; तस्याः = सीतायाः, स्तनौ = कुचौ, प्रियोपभोगचिह्नेषु - प्रियस्य रामस्य उपभोगसमयकृतेषु नखक्षतादिचिह्नेषु, पौरोभाग्यं-दोषदृष्टिं, आचरन्निव = कुर्वन्निव, विददार - तुतोद ।

भावः – इन्द्रपुत्रः काकः आसुरभावमाश्रितस्सन् सीतायाः स्तनान्तरे विदारितवान् ।

तस्मिन्नास्थदिषीकास्त्रं रामो रामाऽवबोधितः ।
आत्मानं मुमुचे तस्मादेकनेत्रव्ययेन सः ॥ २३ ॥

अर्थः – रामावबोधितः = रामया सीतया, अवबोधितः = प्रबोधितः, रामः, तस्मिन्–काके, इषीकास्त्रं = अभिमन्त्रितं कुशं, आस्थत् = प्राक्षिपत्, सः=काकः, तस्मात् = अस्त्रात्, एकनेत्रव्ययेन – दक्षिणाक्षिप्रदानेन, आत्मानं, मुमुचे = मोचयति स्म ।

भावः – सीतया प्रबोधितो रामः काकस्य चेष्टितं अवबुध्य तस्मिन् कुशमेकं अभिमन्त्र्य प्रायुङ्क्त । स काकः तस्मादस्त्रात् आत्मानं मोचयितुमसमर्थस्सन् त्रीन् लोकान् संपरिक्रम्य, तमेव शरणं गत्वा दक्षिणाक्षिप्रदानेन विमुक्तोऽभवत् ।

रामस्त्वासन्नदेशत्वाद्भरतागमनं पुनः ।
आशङ्क्योत्सुकसारंगां चित्रकूटस्थलीं जहौ ॥ २४॥

अर्थः – आसन्नदेशत्वात् – समीपप्रदेश इति हेतोः, पुनः भरतागमनं आशङ्क्य – पुनः पुनः भरतः स्वान्तिकं आगच्छेदिति शङ्कमानः, उत्सुकसारङ्गां = उत्कण्ठितहरिणयुतां, चित्रकूटस्थलीं–चित्रकूटप्रदेशं, जहौ– तत्याज ।

भावः – अयोध्यायाः समीपे वर्तमानत्वात् पुनः पुनः भरतः चित्रकूटं आगच्छेदिति मत्वा रामः चित्रकूटप्रान्तप्रदेशं परित्यक्तवान् ।

प्रययावातिथेयेषु वसन् ऋषिकुलेषु सः ।
दक्षिणां दिशमृक्षेषु वार्षिकेष्विव भास्करः ॥ २५ ॥

अर्थः– सः = रामः, आतिथेयेषु - अतिथियोग्येषु, ऋषिकुलेषु - आश्रमपदेषु, वार्षिकेषु - वर्षाकालीनेषु, ऋक्षेषु - नक्षत्रेषु नक्षत्रपुंजेषु राशिषु वा, भास्करः इव = सूर्यं इव, वसन्, दक्षिणां दिशं, प्रययौ - जगाम ।

भावः – रामः सीतया लक्ष्मणेन च सह तत्र तत्र ऋषीणां आश्रमेषु अतिथिः भूत्वा वर्षाकालीनसूर्यं इव अप्रकटीकृतप्रतापस्सन् दक्षिणतो जगाम ।

★ बभौ तमनुगच्छन्ती विदेहाधिपतेः सुता ।
प्रतिषिद्धाऽपि कैकेय्या लक्ष्मीरिव गुणोन्मुखी ॥ २६ ॥

अर्थः– तं - रामं, अनुगच्छन्ती, विदेहाधिपतेः जनकस्य, सुता–नन्दिनी सीता, कैकेय्या, प्रतिषिद्धाऽपि - निवारिताऽपि, गुणोन्मुखी - गुणोत्सुका, लक्ष्मीः इव - राज्यलक्ष्मीरिव, बभौ - रराज ।

भावः – रामं अनुसृत्य गच्छन्ती सीता, कैकेय्या निवारिताऽपि, गुणैराकृष्टा राज्यलक्ष्मीरिव व्यराजत ।

अनसूयातिसृष्टेन पुण्यगन्धेन काननम् ।
सा चकाराङ्गरागेण पुष्पोच्चलितषट्पदम् ॥ २७ ॥

अर्थः– सा–सीता, अनसूयातिसृष्टेन - अनसूयया अत्रिभार्यया दत्तेन, पुण्यगन्धेन = उत्तमपरिमळेन, अङ्ग-

रागेण - चन्दनेन, काननं - वनं, पुष्पोच्चलितषट्पदं - पुष्पेभ्यः निर्गतभ्रमरं, चकार - अकरोत् ।

भावः – सीता अत्रिमुनेराश्रमे अनसूयया दत्तेन उत्तमगन्धेन अंगरागेण रञ्जिता सती वने विचरन्ती पुष्पगन्धासक्तान् भ्रमरान् पुष्पेभ्यः स्वान्तिकमाचकर्ष । अनसूयया दत्तोऽङ्गरागः भ्रमरान् आकर्षन् अत्युत्तम इति निरूपितः ।

☆ संध्याभ्रकपिशस्तस्य विराधो नाम राक्षसः ।
अतिष्ठत् मार्गमावृत्य रामस्येन्दोरिव ग्रहः ॥ २८॥

अर्थः–संध्याभ्रकपिशः- संध्याकालीनमेघवत् कपिशवर्णः, विराधो नाम राक्षसः, ग्रहः = राहुः, इन्दोः इव - चन्द्रस्य इव, तस्य रामस्य, मार्गं, आवृत्य = अवरुद्धय, अतिष्ठत् ।

भावः–विराधो नाम राक्षसः चन्द्रस्य मार्गं राहुरिव रामस्य मार्गं निरुन्धन् आस्त ।

☆ स जहार तयोर्मध्ये मैथिलीं लोकशोषणः ।
नभोनभस्ययोर्वृष्टिमवग्रह इवान्तरे ॥ २९ ॥

अर्थः– लोकशोषणः- लोकस्य शोषक,: स = विराधराक्षसः, तयोः - रामलक्ष्मणयोः, मध्ये (वर्तमानां), मैथिलीं - सीतां, नभोनभस्ययोः - श्रावणभाद्रपदयोः, अन्तरे – मध्ये, वृष्टिं - वर्षं, अवग्रहः इव -वर्षप्रतिबन्ध इव, जहार - अपाहरत् ।

भाव:– लोकभीकर: स राक्षस: रामलक्ष्मणयोर्मध्ये विद्यमानां सीतां अपहृत्य द्रुतवान् । श्रावणभाद्रपदयोः वृष्टियोग: तत्प्रतिबन्धयोगेन यथापहृता भवति तथा सीता अपहृता ।

तं विनिष्पिष्य काकुत्स्थौ पुरा दूषयति स्थलीम् ।
गन्धेनाऽशुचिना चेति वसुधायां निचखनतु: ।। ३०।।

अर्थः – काकुत्स्थौ = ककुत्स्थस्य गोत्रापत्ये पुमांसौ रामलक्ष्मणौ, तं – विराधं, विनिष्पिष्य–हत्वा, अशुचिना गन्धेन = दुर्गन्धेन, स्थलीं– आश्रमभुवं, दूषयति पुरा – दूषयिष्यति, इति, वसुधायां– भूमौ, निचखनतु: = खनित्वा तं निक्षिप्तवन्तौ च ।

भाव: – रामलक्ष्मणौ तं विराधं हत्वा, तस्य शरीरं आश्रमस्थलं दुर्गन्धेन दूषयिष्यतीति मत्वा भूमौ निक्षिप्त-वन्तौ ।

★ पञ्चवट्यां ततो राम: शासनात्कुम्भजन्मन: ।
अनपोढस्थितिस्तस्थौ विन्ध्याद्रि: प्रकृताविव ।।३१।।

अर्थः– तत:–तदनन्तरं, राम:, कुम्भजन्मन: – अग-स्त्यस्य, शासनात्–आज्ञया, पञ्चवट्यां = पञ्चवटीनामके स्थले, विन्ध्याद्रि:=विन्ध्यपर्वत:, प्रकृतौ इव– पूर्वावस्थायां इव, अनपोढस्थिति:–अनतिक्रान्तमर्याद:, तस्थौ– अवर्तत

भावः – पूर्वं विन्ध्याद्रिः मेरुस्पर्धया अतीव वर्धते स्म । तदात्वे अगस्त्यः तं शशास । सोऽपि प्रकृतिस्थोऽभूत्। रामोऽपि अगस्त्यवचनात् पञ्चवटीं प्राप्य वितयवमिताङ्गः स्वस्थ आसीत् ।

★ रावणावरजा तत्र राघवं मदनातुरा ।
अभिपेदे निदाघार्ता व्यालीव मलयद्रुमम् ।। ३२ ।।

अर्थः – तत्र-पञ्चवटयां, मदनातुरा= कामातुरा, रावणावरजा = रावणस्य भगिनी शूर्पणखा नाम राक्षसी, मलयद्रुमं इव-चन्दनद्रुमं इव अभिपेदे = प्राप ।

भावः – पञ्चवटयां शूर्पणखा नाम राक्षसी कामार्ता यथा ग्रीष्मसंतापिता भुजंगो चन्दनद्रुमं वृणोति तथा रामं अविन्दत ।

★ सा सीतासंनिधावेव तं वव्रे कथितान्वया ।
अत्यारूढो हि नारीणामकालज्ञो मनोभवः ।। ३३ ।।

अर्थः – सा=शूर्पणखा, सीतासंनिधौ=सीतायाः समीपे एव, कथितान्वया-स्ववंशं कीर्तयन्ती, रामं, वव्रे-वृतवती, अत्यारूढः-अतिप्रवृद्धः, नारीणां-स्त्रीणां, मनोभवः=कामः, अकालज्ञो हि = समयज्ञो न हि भवति ।

भावः – शूर्पणखा स्ववंशख्यातिं स्वयमेव कीर्तयन्ती सीतायाः समीप एव रामं वृतवती । इदं स्वाभाविकमेव ।

स्त्रीणां हि अतिप्रवृद्धः कामः समयज्ञतां लोपयति ।

* कलत्रवानहं बाले कनीयांसं भजस्व मे ।
इति रामो वृषस्यन्तीं वृषस्कन्धः शशास ताम् ।।३४।।

अर्थः— वृषस्कन्धः-वृषस्येव स्कन्धः यस्य सः तथाभूतः, रामः, वृषस्यन्तीं-पुरुषमात्मने इच्छन्तीं, तां-शूर्पणखां, बाले अहं, कलत्रवान्=कृतदारः, मे, कनीयांसं = अनुजं लक्ष्मणं, भजस्व=प्राप्नुहि, इति, शशास = आज्ञप्तवान् ।

भावः — आत्मानं कामयन्तीं शूर्पणखां प्रति रामोऽब्रवीत् - बाले! अहं सद्वितीयः, मदनुजो लक्ष्मणस्तु अद्वितीयः, ततस्तमेव गच्छ इति ।

ज्येष्ठाभिगमनात्पूर्वं तेनाप्यनभिनन्दिता ।
साऽभूद्रामाश्रया भूयो नदीवोभयकूलभाक् ।। ३५ ।।

अर्थः— पूर्वं ज्येष्ठाभिगमनात् - प्रथमतः ज्येष्ठं प्रत्येव गमनात्, तेन - लक्ष्मणेनापि, अनभिनन्दिता - अनङ्गीकृता, भूयः = पुनः, रामाश्रया - रामं आश्रितवती, सा - राक्षसी, उभयकूलभाक् - पर्यायेण कूलद्वयगामिनी, नदीव, अभूत् ।

भावः — पूर्वं रामाभिगमनमेव हेतुं कृत्वा लक्ष्मणः शूर्पणखां नाङ्गीचकार । पुनस्सा राक्षसी राममेवाभिजगाम । एवं सा रामात् लक्ष्मणं प्रति, अथ तस्मात् रामं प्रति यातायाताभ्यां पर्यायेण उभयकूलगामिनी नदीवाभूत्।

☆ संरंभं मैथिलीहासः क्षणसौम्यां निनाय ताम् ।
निवातस्तिमितां वेलां चन्द्रोदय इवोदधेः ।। ३६ ।।

अर्थः- मैथिलीहासः- सीतायाः हासः, क्षणसौम्यां- क्षणमात्रं सौम्याकारां, तां = राक्षसीं, निवातस्तिमितां = निवातेन निश्चलां, उदधेः - समुद्रस्य, वेलां - तीररेखां, चन्द्रोदय इव, संरंभं = संक्षोभं, निनाय = गमयति स्म ।

भावः - वाताभावेन निश्चलां वेलां चन्द्रोदयः यथा क्षोभयति तथा सीतायाः हासः क्षणमात्रं सौम्याकारां शूर्पणखां क्षोभयति स्म ।

फलमस्योपहासस्य सद्यः प्राप्स्यसि पश्य माम् ।
मृग्याः परिभवो व्याघ्र्यामित्यवेहि त्वया कृतम् ।। ३७ ।।

इत्युक्त्वा मैथिलीं भर्तुरङ्के निविशतीं भयात् ।
रूपं शूर्पणखा नाम्नः सदृशं प्रत्यपद्यत ।। ।। ३८ ।।

अर्थः- अस्य उपहासस्य = एतत्परिहासस्य, फलं - प्रयोजनं, सद्यः- सम्प्रत्येव, प्राप्स्यसि, मां पश्य, त्वया कृतं उपहासरूपं कर्म, व्याघ्र्यां=शार्दूलीविषये, मृग्याः = मृगवध्वाः कर्त्र्याः, परिभवः इति, अवेहि = जानीहि, भर्तुः - पत्युः, अङ्के-उत्सङ्गे, भयात् निविशतीं-आलिङ्ग्य मिलीनां, मैथिलीं- सीतां प्रति, इत्युक्त्वा - पूर्वोक्तविधया उक्त्वा, शूर्पणखा, नाम्नः = स्वनाम्नः, सदृशं रूपं, प्रत्यपद्यत - प्राप्तवती ।

भाव:- सीतया अपहासे कृते शूर्पणखा अतीव क्षुब्धा सती रोषेण तां भर्तुरङ्के निलीनां भर्त्सयन्ती स्वनामोचितं आकारं शूर्पाकारनखयुक्तं दर्शितवती ।

लक्ष्मणः प्रथमं श्रुत्वा कोकिलामञ्जुवादिनीम् ।
शिवाघोरस्वनां पश्चाद्बुबुधे विकृतेति ताम्।। ३९ ।।

अर्थ:- लक्ष्मणः प्रथमं, कोकिलामञ्जुवादिनीं = कोकिलावत् कलभाषिणीं, पश्चात् - तदनु, शिवाघोर-स्वनां - सृगालीवत् विकृतस्वरां तां, श्रुत्वा (तस्याः स्वरं श्रुत्वा) विकृता इति - मायाविनीति, बुबुधे-ज्ञातवान् ।

भाव:- प्रथमं कोकिलस्वरां पश्चात् भैरवस्वरां तां शूर्पणखां लक्ष्मणः मायाविनीमवगतवान् ।

पर्णशालामथ क्षिप्रं विकृष्टासिः प्रविश्य सः ।
वैरूप्यपौनरुक्त्येन भीषणां तामयोजयत् ।। ४० ।।

अर्थ - अथ सः लक्ष्मणः, विकृष्टासिः = कोशात् उद्धृतखड्गः सन्, क्षिप्रं - सत्वरं, पर्णशालां प्रविश्य, भीषणां= भीकराकारां, तां = राक्षसीं, वैरूप्यपौनरुक्त्येन- वैरूप्यस्य द्वैगुण्येन, अयोजयत् = योजितवान् ।

भाव:- लक्ष्मणस्सत्वरं कोशात् खड्गमाकृष्य पर्ण-शालां प्रविश्य, स्वतः विकृताकारां तां राक्षसीं कर्णनासादि च्छेदेन अतीव विकृतामकरोत् ।

सा वक्रनखधारिण्या वेणुकर्कशपर्वया ।
अङ्कुशाकारयाऽङ्गुल्या तावतर्जयदम्बरे ॥ ४१ ॥

अर्थः– सा= राक्षसी, वक्रनखधारिण्या - वक्रनखवत्या, वेणुकर्कशपर्वया= वेणुवत् कर्कशपर्वधारिण्या, अङ्कुशाकारया = अङ्कुशस्य आकारवदाकारवत्या, अंगुल्या, तौ-रामलक्ष्मणौ, अम्बरे-आकाशे स्थिता सती, अतर्जयत्-अभर्त्सयत् ।

भाव:– विरूपिता शूर्पणखा उत्पत्य गगने स्थिता सती तौ रामलक्ष्मणौ वक्रनखया वेणुवत् कर्कशपर्वया अत एव अङ्कुशाकारया अङ्गुल्या तर्जितवती ।

प्राप्य चाशु जनस्थानं खरादिभ्यस्तथाविधम् ।
रामोपक्रमाचख्यौ रक्षःपरिभवं नवम् ४२॥ ॥

अर्थः– सा, आशु = शीघ्रमेव, जनस्थानं प्राप्य, खरादिभ्यः राक्षसेभ्यः, तथाविधं - स्वाङ्गच्छेदात्मकं, रामोपक्रमं - रामस्य उद्यमं, नवं- नूतनं, रक्षः परिभवं= रक्षसां परिभवं, आचख्यौ च = आख्यातवती ।

भाव:– सा शूर्पणखा शीघ्रमेव रक्षसां निलयं जनस्थानं प्राप्य तत्रत्येभ्यः खरप्रमुखेभ्यः राक्षसेभ्यः, स्वाङ्गवैरूप्यं आपादितवन्तौ रामलक्ष्मणौ प्रतिकर्तुं उद्युक्तौ, राक्षसकुलस्यैवायं परिभवः इति उच्चैर्घोषितवती ।

मुखावयवलूनां तां नैर्ऋता यत्पुरो दधुः ।
रामाभियायिनां तेषां तदेवाभूदमंगलम् ४३ ॥ ॥

अर्थः- नैर्ऋताः- राक्षसाः, मुखावयवलूनां = मुखावयवेषु कर्णादिषु छिन्नां, तां = शूर्पणखां, पुरो दधुः = अग्रे चक्रुः, इति यत्, तदेव, रामाभियायिनां- रामं अभिद्रवतां, तेषां = राक्षसानां, अमङ्गलं = अशुभं, अभूत् ।

भावः- खरादयो राक्षसाः छिन्नकर्णनासां शूर्पणखां अग्रे कृत्वा यतो राममभिद्रुतवन्तः, तदेव तेषां अमङ्गलकरमासीत् ।

☆ उदायुधानापततस्तान्दृप्तान् प्रेक्ष्य राघवः ।
निदधे विजयाशंसां चापे सीतां च लक्ष्मणे ।। ४४ ।।

अर्थः- उदायुधान्=उद्यतायुधान्, आपततः - आगच्छतः, दृप्तान् -दर्पेण उद्धतान्, तान्-खरादीन्, प्रेक्ष्य-दृष्ट्वा, राघवः- रामः, चापे=धनुषि, विजयाशंसां-विजयस्य आशां, लक्ष्मणे, सीतां च, निदधे = निहितवान् ।

भावः - युद्धायागतान् खरादीन् दृष्ट्वा रामः सीतारक्षणे लक्ष्मणं नियोज्य धनुर्धारी विजिगीषुस्तस्थौ ।

एको दाशरथिः कामं यातुधानाः सहस्रशः ।
ते तु यावन्त एवाजौ तावांश्च ददृशे स तैः ।।४५।।

अर्थः- दाशरथिः = रामः, एकः = एकाकी, यातुधानाः-राक्षसाः, सहस्रशः=सहस्रगुणेन सन्ति, कामं अस्तु, आजौ=युद्धे (प्रवृत्ते) ते - यातुधानाः, यावन्तः - यावत्संख्याकाः, तावानेव - तावत्संख्याक एव, सः=रामः, तैः-राक्षसैः, ददृशे = दृष्टः ।

भावः– यद्यपि युद्धरंगे रामः एकाकी, राक्षसास्तु सहस्रसंख्याकाः, तथापि, युद्धे प्रवृत्ते, तैर्युध्यन् रामः तावत्संख्याक एव दृष्टः यावत्संख्याकास्ते राक्षसा आसन्। रामस्य युद्धकौशलं शस्त्रास्त्रप्रयोगनैपुण्यं च तथाविधमिति भावः।

असज्जनेन काकुत्स्थः प्रयुक्तमथ दूषणम्।
न चक्षमे शुभाचारः स दूषणमिवात्मनः ॥ ४६ ॥

अर्थः– अथ, शुभाचारः- रणे साधुचारी सद्वृत्तश्च, काकुत्स्थः-रामः, असज्जनेन-दुर्जनेन रक्षोजनेन, प्रयुक्तं = प्रेषितं उच्चरितं च, दूषणं-दूषणनामानं राक्षसं, आत्मनः- स्वस्य, दूषणं इव - दोषमिव, न चक्षमे - न सेहे।

भावः– रामः रक्षोभिः प्रेषितं दूषणाख्यमसुरं आत्मदूषणमिव निग्रहीतुं उद्युक्तोऽभवत्।

तं शरैः प्रतिजग्राह खरत्रिशिरसौ च सः।
क्रमशस्ते पुनस्तस्य चापात्सममिवोद्ययुः ॥ ४७ ॥

अर्थः– सः = रामः, तं-दूषणं, खरत्रिशिरसौ च - खरं त्रिशिरसं च, शरैः-बाणैः, प्रतिजग्राह- प्रतिगृहीतवान् निगृहीतवान्, क्रमशः - यथाक्रमं (निर्गता अपि), तस्य= रामस्य, ते-शराः पुनः, चापात्-धनुषः, समं-युगपत् इव, उद्ययुः - निर्ययुः।

भावः– रामः शरान् प्रयुज्य दूषणं खरत्रिशिरसौ च जघान। यद्यपि ते शराः एकस्मादनन्तरमेक इति क्रमेणैव

रामेण प्रयुक्ताः, तथापि ते बाणाः धनुषः युगपत् निर्गता इव दृष्टाः । अनेन रामस्य शरप्रयोगलाघवं व्यक्तम् ।

तैस्त्रयाणां शितैर्बाणैः यथापूर्वविशुद्धिभिः ।
आयुर्देहातिगैः पीतं रुधिरं तु पतत्रिभिः ।। ४८ ।।

अर्थः – देहातिगैः - देहं अतीत्य = भित्वा गतैः, यथापूर्वविशुद्धिभिः = पूर्ववत् विशुद्धैः, शितैः - तीक्ष्णैः, तैः - बाणैः, त्रयाणां - खरदूषणत्रिशिरसां, आयुः पीतं, रुधिरं तु, पतत्रिभिः - पक्षिभिः (पीतं)

भावः – रामबाणाः अतिशीघ्रगामित्वात् खरदूषणादीनां देहान् भित्वाऽतिक्रम्य यथापूर्वं रक्तलेपनं विना विशुद्धा एव आसन् । रामबाणैः तेषां आयुरेव पीतं (हृतं) न तु रुधिरं । तत्तु गृध्रादिभिः पक्षिभिः पीतम् ।

तस्मिन् रामशरोत्कृत्ते बले महति रक्षसाम् ।
उत्थितं ददृशेऽन्यच्च कबन्धेभ्यो न किंचन ।। ४९ ।।

अर्थः– रामशरोत्कृत्ते =रामबाणैः छिन्ने, तस्मिन् महति रक्षसां बले, उत्थितं = उत्थानक्रियाविशिष्टं, कबन्धेभ्यः- शिरोरहितशरीरेभ्यः, अन्यत् - इतरत्, किंचन- एकमपि, न ददृशे - न दृष्टं ।

भावः– रामेण रक्षसां महत् सैन्यं नाशितं । तत्र प्राणावशिष्टानि शिरोहीनशरीराण्येव उत्पतन्ति स्म, अन्यत्सर्वं निश्चलमासीत् ।

सा बाणवर्षिणं रामं योधयित्वा सुरद्विषाम् ।
अप्रबोधाय सुष्वाप गृध्रच्छाये वरूथिनी ।। ५० ।।

अर्थः- सुरद्विषां - रक्षसां, सा वरूथिनी-सा सेना, बाणवर्षिणं=बाणप्रयोक्तारं, रामं, योधयित्वा = युद्धं कारयित्वा, गृध्रच्छाये = गृध्राणां छायायां, अप्रबोधाय = अपुनर्बोधाय, सुष्वाप = सुप्ता ।

भावः- सा राक्षससेना रामं योधियित्वा तेनार्दिता सती शाश्वतीं निद्रां प्राप । बहवो गृध्राश्च तच्छवभक्षणार्थमागत्य नभसि स्थिताः घनां छायां समपादयन् ।

राघवास्त्रविदीर्णानां रावणं प्रति रक्षसाम् ।
तेषां शूर्पणखैवैका दुष्प्रवृत्तिहराऽभवत् ।। ५१ ।।

अर्थः – शूर्पणखा एकैव रावणं प्रति, राघवास्त्रविदीर्णानां=रामबाणैर्हतानां, तेषां रक्षसां=खरदूषणादीनां, दुष्प्रवृत्तिहरा - दुर्वार्ताप्रापिका, अभवत् ।

भावः – रामबाणैः राक्षससैन्ये निहते सति, रावणं एतां दुर्वार्तां श्रावयितुं शूर्पणखैवावशिष्टा अभवत् । सा सर्वं वृत्तान्तं निवेद्य रावणं उद्वेजितवती ।

निग्रहात्स्वसुराप्तानां वधाच्च धनदानुजः ।
रामेण निहितं मेने पदं दशसु मूर्धसु ।। ५२ ।।

अर्थः- स्वसुः-स्वभगिन्याः शूर्पणखायाः, निग्रहात्-अङ्गच्छेदात्, आप्तानां - बन्धूनां खरादीनां, वधाच्च -

संहाराच्च, धनदानुजः-धनदस्य कुबेरस्य कनिष्ठः रावणः, दशसु-दशसंख्याकेषु, मूर्धसु - स्वशिरस्सु, रामेण, पदं - पाद, निहितं, मेने = अमन्यत ।

भावः – शूर्पणखायाः वैरूप्यकरणेन, खरदूषणादीनां स्वबन्धूनां वधाच्च रावणस्य दशापि शिरांसि रामपाद-निक्षेपेणेव अवमानभारेण अवनतान्यासन् ।

रक्षसा मृगरूपेण वञ्चयित्वा स राघवौ ।
जहार सीतां पक्षीन्द्रप्रयासक्षणविघ्नितः ।। ५३ ।।

अर्थः– सः= रावणः, मृगरूपेण, रक्षसा = मारीचेन, राघवौ-रामलक्ष्मणौ, वञ्चयित्वा=प्रतार्य, पक्षीन्द्रप्रयास-क्षणविघ्नितः - पक्षीन्द्रस्य जटायुषः प्रयासेन युद्धरूपेण क्षणमात्रं संजनितविघ्नस्सन्, सीतां, जहार - अपहृतवान्।

भावः– मृगरूपधारिणा मायाविना मारीचेन राम-लक्ष्मणौ वञ्चयित्वा अपवाह्य, जटायुषा प्रतिरुद्धोऽपि रावणः सीतां अपाहरत् । (जटायुर्नाम गृध्रराजः दश रथस्य सखा सीता दशरथस्य स्नुषेति तां रावणात रक्षितुं स पक्षी राक्षसं निरुद्धवान् हतः ।)

तौ सीतान्वेषिणौ गृध्रं लूनपक्षमपश्यताम् ।
प्राणैर्दशरथप्रीतेरनृणं कण्ठवर्तिभिः ।। ।। ५४ ।।

अर्थः– सीतान्वेषिणौ, तौ = रामलक्ष्मणौ, लूनपक्षं= रावणेन छिन्नपक्षं, कण्ठवर्तिभिः-कण्ठगतैः, प्राणैः, दशरथ-

प्रीतेः -दशरथसख्यस्य, अनृणं-ऋणविमुक्तं, गृध्रं=जटायुषं, अपश्यतां = दृष्टवन्तौ ।

भावः- रामलक्ष्मणौ सीतां अन्विष्यन्तौ, रावणेन छिन्नपक्षतया कण्ठगतप्राणं दशरथसख्यात् ऋणविमुक्तं जटायुषं दृष्टवन्तौ ।

★ स रावणहृतां ताभ्यां वचसाऽऽचष्ट मैथिलीम् ।
आत्मनस्सुमहत्कर्म व्रणैरावेद्य संस्थितः ॥ ५५ ॥

अर्थं - सः- जटायुः, मैथिलीं- सीतां, रावणहृतां- रावणेन अपहृतां, ताभ्यां = रामलक्ष्मणाभ्यां, वचसा = वाग्वृत्या, आचष्ट - अवोचत्. आत्मनः - स्वस्य, सुमहत् कर्म=युद्धरूपं, व्रणैः- देहव्रणैः, आवेद्य-विज्ञाप्य, संस्थितः- मृतः ।

भावः- जटायुः रामलक्ष्मणौ प्रति सीता रावणेन अपहृता इति कथितवान् । सीतापहरणसमये रावणेन सह प्रवृत्ते युद्धे व्रणिताङ्गत्वात् मृतश्च ।

तयोस्तस्मिन्नवीभूतपितृव्यापत्तिशोकयोः ।
पितरीवाग्निसंस्कारात्परा ववृतिरे क्रियाः ॥ ५६ ॥

अर्थः - नवीभूतपितृव्यापत्तिशोकयोः-जटायुषो मरणेन नवीकृतपितृमरणजनितदुःखयोः, तयोः - रामलक्ष्मणयोः, तस्मिन्-गृध्रे, पितरि इव - स्वजनकविषये इव

अग्निसंस्कारात् - अग्निसंस्कारमारभ्य, पराः क्रियाः = उत्तरक्रियाः. ववृत्तिरे=अवर्तन्त ।

भाव:– जटायुषो मरणेन रामलक्ष्मणयोः पितृशोकः पुनर्नवीकृत इव आसीत् । तौ पितृतुल्ये जटायुषि विषये अग्निसंस्कारादिकाः सर्वाः अपरक्रियाः कृतवन्तौ । पितुस्तु अन्तिमसमये तौ तदन्तिके न स्तः । अग्निसंस्कारादिक्रियाः न ताभ्यां निर्वर्तिताः । अतस्तत्तुल्ये तत्सर्वं निर्वर्तितमिव ।

वधनिर्धूतशापस्य कबन्धस्योपदेशतः ।
मुमूर्छ सख्यं रामस्य समानव्यसने हरौ ॥ ५७ ॥

अर्थः – वधनिर्धूतशापस्य = रामेण कृतेन वधेन अपगतशापदोषस्य, कबन्धस्य - कबन्धनाम्नो राक्षसस्य, उपदेशतः - उपदेशेन, नामस्य, समानव्यसने = समदुःखें, हरौ - कपौ सुग्रीवे, सख्यं - मैत्रीं, मुमूर्छ = ववृधे ।

भाव:– सीतान्वेषणाय गच्छन्तौ तौ रामलक्ष्मणौ मध्येमार्गं कबन्धनामानं राक्षसं जघ्नतुः । वधेन शाप-निर्मुक्तः कबन्धः रामाय समानदुःखं सुग्रीवं आख्याय तेन सह मैत्री कार्या इति उक्तवान् । रामोऽपि सुग्रीवं मित्र-मकरोत् ।

★ स हत्वा वालिनं वीरस्तत्पदे चिरकाङ्क्षिते ।
धातोः स्थान इवादेशं सुग्रीवं संन्यवेशयत् ॥ ५८ ॥

अर्थः- वीरः, सः रामः, वालिनं=सुग्रीवाग्रजं, हत्वा, चिरकाङ्क्षिते = चिरात् अभिलषिते, तत्पदे = वालिनः स्थाने, धातोः=क्रियावाचिनः शब्दस्य स्थाने, आदेशमिव = आदेशभूतं धात्वान्तरमिव, सुग्रीवं, संन्यवेशयत् =स्थापितवान् ।

भावः- यथा व्याकरणशास्त्रे 'आस्तेर्भूः' इत्यादिना असधातोः स्थाने भूधातुरादेशो विधीयते तथा रामः वालिनं हत्वा तस्य स्थाने सुग्रीवं स्थापयामास ।

☆ इतस्ततश्च वैदेहीमन्वेष्टुं भर्तृचोदिताः ।
कपयश्चेरुरार्तस्य रामस्येव मनोरथाः ॥ ५९ ॥

अर्थः- वैदेहीं = सीतां, अन्वेष्टुं = मार्गितुं, भर्तृचोदिताः=भर्त्रा सुग्रीवेण प्रयुक्ताः, कपयः = हनुमत्प्रमुखाः वानराः, आर्तस्य=विरहातुरस्य, रामस्य, मनोरथाः इव - कामा इव, इतस्ततः चेरुः - नानादेशेषु बभ्रमुः ।

भावः- सुग्रीवेण प्रेरिताः कपयः सीतामन्वेष्टुं प्रवृत्ताः, मदनातुरस्य रामस्य मनोभावा इव इतस्ततोऽचरन् ।

☆ प्रवृत्तावुपलब्धायां तस्याः संपातिदर्शनात् ।
मारुतिः सागरं तीर्णः संसारमिव निर्ममः ॥ ६० ॥

अर्थः- संपातिदर्शनात् = संपातिनाम्नः जटायुषो ज्येष्ठभ्रातुः दर्शनात्, तस्याः =सीतायाः, प्रवृत्तौ=वार्तायां,

उपलब्धायां=ज्ञातायां सत्यां, मारुतिः - मारुतस्य अपत्यं पुमान् हनुमान्, सागरं=समुद्रं, निर्ममः - निस्स्पृहः, संसारं इव - अविद्याबन्धनमिव, तीर्णः - ततार।

भावः- संपातिर्नाम जटायुषो ज्येष्ठो भ्राता। तस्य मुखतः सीतायाः वृत्तान्ते ज्ञाते हनुमान् निस्स्पृहस्संसारमिव सागरं तीर्णः।

☆ दृष्टा विचिन्वता तेन लङ्कायां राक्षसीवृता।
जानकी विषवल्लीभिः परीतेव महौषधिः ॥ ६१ ॥

अर्थः- लङ्कायां = रावणराजधान्यां, विचिन्वता = अन्विष्यता, तेन = हनूमता, राक्षसीवृता - राक्षसीभिः परिवृता, जानकी = सीता, विषवल्लीभिः = विषलताभिः, परीता = परिवृता, महौषधिः इव = सञ्जीवनी लतेव, दृष्टा।

भावः- हनुमान् लङ्कायां सीतामन्विष्यन्, राक्षसीभिः परिवृतां, विषवल्लीभिर्वेष्टितां सञ्जीविनीलतामिव स्थितां, तां ददर्श।

तस्यै भर्तुरभिज्ञानमङ्गुलीयं ददौ कपिः।
प्रत्युद्गतमिवानुष्णैस्तदानन्दाश्रुबिन्दुभिः ॥ ६२ ॥

अर्थः- कपिः=हनुमान्, भर्तुः=रामस्य, अभिज्ञानं - प्रत्यभिज्ञानसाधकं, अनुष्णैः - शीतलैः तदानन्दाश्रुबिन्दुभिः - तस्याः आनन्दबाष्पकणैः, प्रत्युद्गतमिव =

प्रत्युत्थानेनादृतमिव स्थितं, अङ्गुलीयं - ऊर्मिका, तस्यै = जानक्यै, ददौ ।

भाव:- हनुमान् रामेण दत्तं अङ्गुलीयकं तस्यै प्रत्यभिज्ञानाय दत्तवान् । तद्दर्शनेन सीता आनन्दबाष्पाणि मुमोच ।

★ निर्वाप्य प्रियसंदेशैः सीतामक्षवधोद्धतः ।
स ददाह पुरीं लङ्कां क्षणसोढारिनिग्रहः ॥ ६३ ॥

अर्थ:- सः = कपिः, प्रियसन्देशैः = प्रियस्य रामस्य सन्देशवाक्यैः, सीतां, निर्वाप्य-सुखयित्वा, अक्षवधोद्धतः - अक्षस्य रावणकुमारस्य वधेन धृष्टस्सन्, लङ्कां पुरीं, ददाह = भस्मीचकार ।

भाव:- हनुमान् रामसन्देशवाक्यैः सीतां सान्त्वयित्वा, रावणकुमारं अक्षं हत्वा, इन्द्रजित्प्रयुक्तेन ब्रह्मास्त्रबन्धेन क्षणमात्रं निगृहीत इव स्थित्वा, पश्चात् लङ्कां भस्मसादकरोत् ।

★ प्रत्यभिज्ञानरत्नं च रामायादर्शयद् कृती ।
हृदयं स्वयमायातं वैदेह्या इव मूर्तिमत् ॥ ६४ ॥

अर्थ:- कृती = कृतकृत्यः हनुमान्, स्वयं, आयातं आगतं, मूर्तिमत्=साकारं, वैदेह्याः - सीतायाः, हृदयमिव स्थितं, प्रत्यभिज्ञानरत्नं=प्रत्यभिज्ञानाय सीतया दत्तं चूडामणिं, रामाय, अदर्शयत् - दर्शितवान् ।

भावः– कृतकृत्यो हनुमान् सीतया प्रत्यभिज्ञानाय दत्तं, तस्या एव मूर्तिमत् हृदयमिव च स्थितं, शिरोभूषणं रामाय अदर्शयत् ।

☆ स प्राप हृदयन्यस्तमणिस्पर्शनिमीलितः ।
अपयोधरसंसर्गां प्रियालिङ्गननिर्वृतिम् ।। ६५ ।।

अर्थः- हृदये=वक्षसि, न्यस्तस्य - धृतस्य, मणेः = अभिज्ञानरत्नस्य, स्पर्शेन, निमीलितः=मोहितः, सः=रामः, अपयोधरसंसर्गां = स्तनस्पर्शरहितां, प्रियायाः= सीतायाः, अलिङ्गनसंजातां, निर्वृतिं - आनन्दं, प्राप = अभजत ।

भावः– रामस्तं प्रत्यभिज्ञानमणिं हृदये निधाय सीतालिङ्गनसंजातमानन्दं अन्वभवत् ।

श्रुत्वा रामः प्रियोदन्तं मेने तत्सङ्गमोत्सुकः ।
महार्णवपरिक्षेपं लङ्कायाः परिखालघुम् ।। ६६ ।।

अर्थः– प्रियायः= प्रेयस्याः जानक्याः, उदन्तं = वार्तां, श्रुत्वा, तत्सङ्गमोत्सुकः=तस्याः सीतायाः सङ्गमे उत्सुकः, रामः, लङ्कायाः, महार्णवपरिक्षेपं - महासमुद्ररूपं परिवेषं, परिखालघुं=दुर्गवेष्टनवत् सुतरं, मेने=अमन्यत ।

भावः– रामः सीतावृत्तान्तं श्रुत्वा तत्सङ्गमे त्वरमाणः, लङ्कां परितः स्थितं महार्णवं दुर्गवेष्टनमिव अल्पं मत्वा तरितुं उद्युक्तोऽभवत् ।

स प्रतस्थेऽरिनाशाय हरिसैन्यैरनुद्रुतः ।
न केवलं भुवः पृष्ठे व्योम्नि सम्बाधवर्तिभिः ॥ ६७ ॥

अर्थः— सः = रामः, केवलं, भुवः पृष्ठे = भूतले, न, किन्तु, व्योम्नि = गगनेऽपि, संबाधवर्तिभिः =अतिसन्निधानात् संकटगामिभिः, हरिसैन्यैः = कपिबलैः, अनुद्रुतः = अनुसृतः सन्, अरिनाशाय=शत्रुनाशाय, प्रतस्थे=प्रययौ ।

भावः— रामः शत्रुनाशाय उद्युक्तः भूतले वियत्तले च निरवकाशं आगच्छद्भिः कपिसैन्यैः अनुगम्यमानो जगाम ।

★ निविष्टमुदधेः कूले तं प्रपेदे विभीषणः ।
स्नेहाद्राक्षसलक्ष्म्येव बुद्धिमाविश्य चोदितः ॥ ३८ ॥

अर्थः— उदधेः कूले = समुद्रतीरे, निविष्टं=सेनानिवेशैः सह स्थितं, तं = रामं, विभीषणः = रावणानुजः, राक्षसलक्ष्म्या, स्नेहात् बुद्धिं आविश्य = आत्मनो मनसि स्थित्वा, चोदितः इव = प्रेरित इव, प्रपेदे = प्रपन्नः ।

भावः— समुद्रतीरे ससैन्यं रामं, विभीषणः राक्षसलक्ष्म्या स्वस्मिन् स्नेहेन प्रचोदित इव प्रपद्य आत्मानं आत्मनः परिवारं च भविष्यतः नाशात् रक्षितवान् ।

★ तस्मै निशाचरैश्वर्यं प्रतिशुश्राव राघवः ।
काले खलु समारब्धाः फलं बध्नन्ति नीतयः ॥ ६९ ॥

अर्थः— राघवः = रघुवंशोद्भवो रामः, तस्मै=विभीषणाय, निशाचरैश्वर्यं = राक्षसाधिपत्यं, प्रतिशुश्राव = प्रतिज्ञातवान्, तथाहि, काले = अवसरे, समारब्धाः=अनुष्ठिताः, नीतयः, फलं बध्नन्ति खलु=फलं जनयन्ति किल।

भावः— रघुवंशोद्भवो रामः प्रपन्नाय विभीषणाय राक्षसाधिपत्यं प्रतिज्ञातवान्। युक्तं चैतत्। समयेऽनुष्टिता नीतिः नूनं फलप्रदा भवति।

☆ स सेतुं बन्धयामास प्लवगैर्लवणाम्भसि।
रसातलादिवोन्मग्नं शेषं स्वप्नाय शार्ङ्गिणः॥७०॥

अर्थः— सः = रामः, लवणाम्भसि = लवणसमुद्रे, प्लवगैः=कपिभिः, शार्ङ्गिणः=विष्णोः, स्वप्नाय=शयनाय, रसातलात् = पातालात्, उन्मग्नं=उत्थितं, शेषमिव, सेतुं, बन्धयामास = अरचयत्।

भावः— रामस्समुद्रे वानरैः सेतुं बन्धयामास। स सेतुः भगवतो विष्णोः शयनाय पातालादुत्थितः शेष इव दृश्यते स्म।

तेनोत्तीर्य पथा लङ्कां रोधयामास पिङ्गलैः।
द्वितीयं हेमप्राकारं कुर्वद्भिरिव वानरैः॥७१॥

अर्थः— रामः, तेन पथा = सेतुमार्गेण, (सागरं) उत्तीर्य=तीर्त्वा, पिङ्गलैः=सुवर्णवर्णैः (अत एव) द्वितीयं हेमप्राकारं कुर्वद्भिरिव स्थितैः, वानरैः लङ्कां, रोधयामास= अरुधत्।

भावः— रामः तेन सेतुमार्गेण समुद्रमुत्तीर्य हेम-प्राकारावृत्तां लङ्कां पिङ्गलवर्णैः वानरैः रोधयामास। वानरसेनायाः वलयः पूर्वस्मात् विस्तृतं द्वितीयं हेमप्राकारं इव आसीत्।

रणः प्रववृते तत्र भीमः प्लवगरक्षसाम्।
दिग्विजृम्भितकाकुत्स्थपौलस्त्यजयघोषणः ॥ ७२ ॥

अर्थः— तत्र=लङ्कायां, प्लवगरक्षसां=वानराणां रक्षसां च, भीमः = भयंकरः, दिग्विजृम्भितकाकुत्स्थपौलस्त्यजय-घोषणः = दिक्षु प्रख्यापितरामरावणजयघोषः, रणः— युद्धं, प्रववृते = प्रवृत्तः।

भावः— लङ्कायां वानराणां रक्षसां च भयंकरं युद्धं प्रवृत्तम्, यत्र उभाभ्यामपि बलाभ्यां तन्नायकयोः रामराव-णयोः जयशब्दः असकृत् उद्घोषितः।

पादपाविद्धपरिघः शिलानिष्पिष्टमुद्गरः।
अतिशस्त्रनखन्यासः शैलरुग्णमतंगजः ॥ ७३ ॥

अर्थः— पादपाविद्धपरिघ.—वृक्षभग्नैः लोहबद्धकाष्ठै-र्युतः, शिलानिष्पिष्टमुद्गरः—शिलाभिः चूर्णितैर्मुद्गरैर्युतः, अतिशस्त्रनखन्यासः — शस्त्रास्त्राण्यपि अतिक्रान्तैः नख-विदारणैर्युतः, शैलरुग्णमतंगजः = शैलैः पर्वतैः पीडितगजै-र्युतश्च, स रण आसीत्।

भावः— तस्मिन् वानरराक्षसयुद्धे वानराणां बलमेव प्रवृद्धमदृश्यत। राक्षसानां परिघाः वृक्षैः, मुद्गराः प्रस्तरैः,

गजदलानि च शैलाघातैः वानरैर्हतानि। अपिच ते वानराः शस्त्रघातमतिवर्तमानैः नखविदारणैः राक्षसान् अपीडयन्।

अथ रामशिरश्छेददर्शनोद्भ्रान्तचेतनाम्।
सीतां मायेति शंसन्ती त्रिजटा समजीवयत् ॥७४॥

अर्थः- अथ = अनन्तर, रामशिरश्छेददर्शनोद्भ्रांत-चेतनाम्-रामस्य छिन्नशिरसः प्रदर्शनेन मूर्छितां सीतां, माया इति -एषा राक्षसमाया इति, शंसन्ती = ब्रुवाणा, त्रिजटा, समजीवयत् = प्राप्तसंज्ञां अकरोत्।

भवः- रावणः विद्युज्जिह्वाख्यं राक्षसं प्रयुज्य मायानिर्मितं रामस्य छिन्नं शिरः प्रदर्श्य सीतां भ्रान्तचित्तां अकरोत्। तेन सीतायाः हृदयपरिवर्तनं भवेदिति तस्य हृदयं। परं तु तदा त्रिजटा नाम सा राक्षसी 'तत्सर्वं मायाकल्पित' मिति प्रबोध्य सीतां आश्वासयामास।

★ कामं जीवति मे नाथ इति सा विजहौ शुचम्।
प्राङ्मत्वा सत्यमस्यान्तं जीवितास्मीति लज्जिता॥

अर्थः- सा = सीता, मे नाथः, कामं = दिष्टचा, जीवति, इति, शुचं=शोकं, विजहौ-अत्यजत्, प्राक्=पूर्वं, अस्य=नाथस्य, अन्तं-नाशं, सत्यं-यथार्थं, मत्वा जीवि-ताऽस्मि=प्राणान् धारयामि,:इति, लज्जिते - लज्जते स्म।

भावः- त्रिजटया बोधिता सीता 'दिष्टचा मे नाथः जीवती'ति तुष्टा वाशुचत्। तथाऽपि पूर्वं भर्तृनाशं मन्य-

माना प्राणधारणं कृतवती किलेति लज्जिताऽभूत् । दुःखा-द्दुःखतरमिदं यद्भर्तृनाशं ज्ञात्वाऽपि पुनर्जीवितधारणमिति ।

गरुडापातविश्लिष्टमेघनादास्त्रबन्धनः ।
दाशरथ्योः क्षणक्लेशः स्वप्नवृत्त इवाभवत् ॥७६॥

अर्थः— गरुडस्य - गरुत्मतः, आपातेन-आगमनेन, विश्लिष्टं - शिथिलितं, मेघनादस्य-इन्द्रजितः, अस्त्रेण-नागपाशेन, बन्धनं यस्मिन् सः, (तथोक्तः) क्षणक्लेशः - क्षणमात्रं बाधा, दाशरथ्योः= रामलक्ष्मणयोः, स्वप्नवृत्तः= स्वप्नावस्थायां जात इव, अभवत् ।

भावः— युद्धे इन्द्रजिता नागास्त्रेण रामलक्ष्मणौ बद्धावभवताम् । तथाऽपि स बन्धनक्लेशः स्वप्नसंजात इव क्षणमात्रमासीत् यतो गरुत्मतः आगमनमात्रेणैव तदस्त्र-बन्धः शिथिलितः ।

★ ततो बिभेद पौलस्त्यः शक्त्या वक्षसि लक्ष्मणम् ।
रामस्त्वनाहतोऽप्यासीद्विदीर्णहृदयः शुचा ॥७७॥

अर्थः— ततः=अनन्तरं, पौलस्त्यः =रावणः, शक्त्या= कासूनामकेन आयुधेन, लक्ष्मणं, वक्षसि - उरसि, बिभेद= विदारयामास, रामस्तु, अनाहतोऽपि - अहतोऽपि, शुचा= शोकेन, विदीर्णहृदयः - विदारितहृदयः, आसीत् ।

भावः— रावणः शक्तिं प्रयुज्य लक्ष्मणं उरसि बिभेद । लक्ष्मणः भूतलेऽपतत् । तच्छोकेन, रामोऽहतोऽपि तत्पार्श्वे-

ऽपतत् । तस्य हृदयं शोकेन विदीर्णमासीत् । रावणः युगपदेव द्वावपि अपातयदिव ।

स मारुतिसमानीतमहौषधिहतव्यथः ।
लङ्कास्त्रीणां पुनश्चक्रे विलापाचार्यकं शरैः ॥७८॥

अर्थः– सः= लक्ष्मणः, मारुतिना = हनुमता, समानीतया, महौषध्या=सञ्जीविन्या, हतव्यथः=गतव्यथस्सन्, पुनः, शरैः = बाणैः, लङ्कास्त्रीणां, विलापे = परिदेवने, आचार्यकं=आचार्यकर्म (उपदेशं), चक्रे=चकार ।

भावः– लक्ष्मणः हनूमता आनीतया संजीविन्या, ओषध्या अपगतव्यथः सन् लङ्कास्त्रीणां विलापाय पुनर्युद्धसन्नद्धोऽभवत् । लङ्कास्त्रीणां रोदनं युद्धे लक्ष्मणेन हनिष्यमाणानां मरणेन इति भावः ।

★ स नादं मेघनादस्य धनुश्चेन्द्रायुधप्रभम् ।
मेघस्येव शरत्कालो न किंचित्पर्यशेषयत् ॥ ७९ ॥

अर्थः– सः =लक्ष्मणः, शरत्कालः मेघस्य इव, मेघनादस्य=इन्द्रजितः, नादं =सिंहनादं गर्जितं, इन्द्रायुधप्रभं= इन्द्रधनुस्सदृशंः धनुः च, किञ्चित् =अल्पमपि, न पर्यशेषयत् = नाऽवशोषितवान् ।

भावः– शरत्काले वर्षसूचकानि गर्जितेन्द्रधनुरादीनि न भवन्ति । तदा मेघः न गर्जति, न वा इन्द्रधनुः प्रदर्श्यं

वर्षति । लक्ष्मणः मेघनादापरनामधेयं इन्द्रजितं नीरव (नीरसतयेति भावः) निरस्त्रं निर्जीवं च अकरोत् ।

★ कुम्भकर्णः कपीन्द्रेण तुल्यावस्थः स्वसुः कृतः ।
रुरोध रामं श्रृंगीव टङ्कच्छिन्नमनश्शिलः ॥ ८० ॥

अर्थः– कपीन्द्रेण = सुग्रीवेण, स्वसुः = शूर्पणखायाः, तुल्यावस्थः = नासाकर्णच्छेदेन सदृशः, कृतः, कुम्भकर्णः, टङ्केन=शिलाभेदनसाधनेन, छिन्ना,=भिन्ना, मनश्शिला = रक्तवर्णधातुविशेषः यस्य: सः (तथोक्तः), शृङ्गी इव= शिखरवान् पर्वत इव, रामं, रुरोध = रुणद्धि स्म ।

भावः– सुग्रीवः कुम्भकर्णस्य कर्णनासादिकं, शूर्पणखायाः लक्ष्मण इव चिच्छेद । एवं विरूपितः कुम्भकर्णः टङ्केन विदारितमनश्शिलः पर्वत इव रामं निरुद्धवान् ।

अकाले बोधितो भ्रात्रा प्रियस्वप्नो वृथा भवान् ।
रामेषुभिरितीवासौ दीर्घनिद्रां प्रवेशितः ॥ ८१ ॥

अर्थः– प्रियस्वप्नः =इष्टनिद्रः, भवान्=त्वं, वृथा = व्यर्थमेव, भ्रात्रा=रावणेन, अकाले = असमये, बोधितः, इतीव=इत्यालोच्येव, असौ=कुम्भकर्णः, रामेषुभिः= रामबाणैः, दीर्घनिद्रां = अनवधिकनिद्रारूपं मरणं, प्रवेशितः = प्रापितः ।

भावः– कुम्भकर्णस्य निद्रा अतीव इष्टा । तथाभूतः असमये भ्रात्रा रावणेन बोधितः बाधितश्च । तस्य अभीप्सितं पूरयितुमिव रामबाणाः दीर्घनिद्रां प्रापयामासुः ।

इतराण्यपि रक्षांसि पेतुर्वानरकोटिषु ।
रजांसि समरोत्थानि तच्छोणितनदीष्विव ।। ८२ ।।

अर्थः– इतराणि रक्षांस्यपि – इतरराक्षसा अपि, समरोत्थानि =युद्धोत्थितानि, रजांसि – परागाः, तेषां = रक्षसां, शोणितनदीषु इव=रक्तप्रवाहेषु इव, वानरकोटिषु – कपिसंघेषु, पेतुः – निपत्य मृतानि ।

भावः– बहवो राक्षसाः वानरैः प्रयुध्य तैर्हताः । यथा परागाः निहतानां रक्षसां रक्तप्रवाहे पतित्वा विनष्टाः तथा विनष्टाः ते ।

★ निर्ययावथ पौलस्त्यः पुनर्युद्धाय मन्दिरात् ।
अरावणमरामं वा जगदद्येति निश्चितः ।। ८३ ।।

अर्थः- अथ – अनन्तरं, पौलस्त्यः = रावणः, अद्य= अधुना, जगत्=लोकः, अरावणं=रावणशून्यं, अरामं= रामशून्यं वा भवेदिति निश्चितः – निश्चितवान् सन्, पुनः= भूयः, युद्धाय, मन्दिरात् – गृहात्, निर्ययौ – निर्जगाम ।

भावः– अद्य जगत् अरावणं वा अरामं वा भविष्यतीति निश्चित्यैव रावणः गृहान्निरगात् ।

रामं पदातिमालोक्य लङ्केशं च वरूथिनम् ।
हरियुग्यं रथं तस्मै प्रजिघाय पुरन्दरः ॥ ८४ ॥

अर्थः– पदाति=पादचारिणं, रामं, वरूथिनं=रथिनं, लङ्केशं = रावणं च, आलोक्य =दृष्ट्वा, पुरन्दरः =इन्द्रः, हरियुग्यं =कपिलवर्णाश्वं, रथं = स्वरथं, तस्मै = रामाय, प्रजिघाय = प्रहितवान् ।

भावः– इन्द्रः रथिनो रावणस्य अग्रतः पादचारिणं स्थितं रामं आलोक्य तस्मै कपिलवर्णाश्वं स्वरथं प्रेषयति स्म । युद्धमर्यादामनुसृत्य समयोरेव जन्यं युक्तमिति भावः ।

तमाधूतध्वजपटं व्योमगंगोर्मिवायुभिः ।
देवसूतभुजालम्बी जैत्रमध्यास्त राघवः ॥ ८५ ॥

अर्थः– राघवः = रामः, व्योमगङ्गोर्मिवायुभिः = आकाशगङ्गातरंगोपर्यायातवातैः, आधूतध्वजपटं = प्रकम्पितपताकं, जैत्रं=जयशीलं, तं = रथं, देवसूतभुजालम्बी= मातलिहस्तावलम्बनः सन्, अध्यास्त = अधिष्ठितवान् ।

भावः– रामः इन्द्रेण प्रहितं जयशीलं रथं मातलिहस्तं आलम्ब्य अधिष्ठितवान् ।

मातलिस्तस्य माहेन्द्रमामुमोच तनुच्छदम् ।
यत्रोत्पलदलक्लैब्यं अस्त्राण्यापुः सुरद्विषाम् ॥८६ ॥

अर्थः– मातलिः=इन्द्रसारथिः, माहेन्द्रं=इन्द्रेण दत्तं, तनुच्छदं=कवचं, तस्य= रामस्य, आमुमोच = आसञ्जया-

मास, यत्र=यस्मिन् कवचे, सुरद्विषां - रक्षसां, अस्त्राणि, उत्पलदलकलैव्यं - उत्पलदलानां मार्दवम्, आपुः= प्रापुः ।

भावः- मातलिः इन्द्रदत्तं कवचं रामं धारयामास, यस्मिश्च कवचे राक्षसैः प्रयुक्तानि सर्वाण्यपि अस्त्राणि उत्पलदलानीव अकठोराणि भवन्ति ।

अन्योन्यदर्शनप्राप्तविक्रमावसरं चिरात् ।
रामरावणयोर्युद्धं चरितार्थमिवाभवत् ॥ ८७ ॥

अर्थः- चिरात्=चिरेण, अन्योन्यदर्शनप्राप्तविक्रमावसरं = परस्परदर्शनेन पराक्रमस्य प्राप्तावसरं, रामरावणयोः युद्धं, चरितार्थं = सफलं, अभवदिव ।

भावः- बहोः कालादनन्तरं परस्परदर्शनेन उभयोः अन्योन्याक्रमणे अवसरः प्राप्तः । फलतः रामरावणयोर्भीषणं युद्धमभवत् ।

भुजमूर्धोरुबाहुल्यादेकोऽपि धनदानुजः ।
ददृशे ह्ययथापूर्वो मातृवंश इव स्थितः ॥ ८८ ॥

अर्थः- अयथापूर्वः =पूर्वं यथा भूतः तथा न भूतः, एकोऽपि सन्, धनदानुजः=रावणः, भुजमूर्धोरुबाहुल्यात् = भुजानां मूर्ध्नां उरूणां च बाहुल्यात्, मातृवंशे=मातृसम्बन्धिनि वर्गे, स्थित इव, ददृशे = दृष्टः, (अत्र यादवः 'दशास्यो विंशतिभुजश्चतुष्पान्मातृमन्दिरे' इति) ।

भावः– एकोऽपि रावणः, भुजानां शिरसां पादानां च बाहुल्यात्, अनेकरक्षः परिवृत इव दृष्टः ।

★ जेतारं लोकपालानां स्वमुखैरर्चितेश्वरम् ।
रामस्तुलितकैलासमरातिं बह्वमन्यत ॥ ८९ ॥

अर्थः– लोकपालानां=इन्द्रादीनां, जेतारं=विजयिनं, स्वमुखैः = स्वशिरोभिः, अर्चितेश्वरं = ईश्वरं अर्चितवन्तं, तुलितकैलासं = कैलासपर्वतं चालितवन्तं, अरातिं = शत्रुं रावणं, रामः, बह्वमन्यत=बहुमानयोग्यं अचिन्तयत् ।

भावः– रामः स्वशत्रुं रावणं इन्द्रादिलोकपालानां जेतारं, स्वशिरोभिः होमं विधाय ईश्वरं तोषितवन्तं, हस्तैः धृत्वा कैलासं तुलितवन्तं, बहुमानयोग्यमेव अमन्यत । महावीराणामिदं लक्षणं यत्प्रतिवीराणां सामर्थ्यं विज्ञायैव स्वशौर्यप्रदर्शनाय प्रवर्तन्त इति ।

तस्य स्फुरति पौलस्त्यः सीतासंगमशंसिनि ।
निचखानाधिकक्रोधः शरं सव्येतरे भुजे ॥ ९० ॥

अर्थः– अधिकक्रोधः = अतीव क्रुद्धः, पौलस्त्यः = रावणः, स्फुरति = स्पन्दमाने, (अत इव) सीतासंगमशंसिनि = सीतया सह समागमं सूचयति, तस्य = रामस्य, सव्येतरे=दक्षिणे, भुजे, शरं=बाणं, निचखान=निखातवान् ।

भावः– अतीव क्रुद्धः रावणः, सीतया सह समागमं सूचयतीव स्पन्दमाने रामस्य दक्षिणभुजे स्पन्दोत्साहं निरुन्धन्निव शरं निखातवान् ।

रावणस्यापि रामास्तो भित्वा हृदयमाशुगः ।
विवेश भुवमाख्यातुमुरगेभ्य इव प्रियम् ॥ ९१ ॥

अर्थः- रामस्तः=रामेण क्षिप्तः, आशुगः - बाणः, रावणस्य - विश्रवसोऽपत्यस्य पुंसः दशग्रीवस्य, हृदयं = वक्षः, भित्वा=विदार्य, उरगोभ्यः - (पातालवासिभ्यः) भुजगेभ्यः, प्रियं - प्रियवार्ता, आख्यातुं इव - वक्तुमिव, भुवं - भूमिं, विवेश - प्रविवेश ।

भावः- रामेण प्रयुक्तः बाणः रावणं वक्षसि विदार्य पातालवासिभ्यः भुजंगेभ्यः प्रियं एतद्वृत्तान्तं कथयितुमिव भूमिं प्रविवेश ।

★ वचसैव तयोर्वाक्यं अस्त्रमस्त्रेण निघ्नतोः ।
अन्योन्यजयसंरम्भो ववृधे वादिनोरिव ॥ ९२ ॥

अर्थः- वाक्यं - परवचनं, वचसैव - स्ववाक्येनैव, अस्त्रं - अन्यस्य बाणं, अस्त्रेण - स्वबाणेन, निघ्नतोः = प्रतिकुर्वतोः, तयोः=रामरावणयोः, वादिनोः इव=कथकयोः इव, अन्योन्यजयसंरम्भः - परस्परविजयोद्यमः, ववृधे = प्रवृद्धः ।

भावः- परस्परजयैषिणौ रामरावणौ वीरालापान् वीरालापैः, अस्त्राणि अस्त्रैश्च प्रतिकुर्वन्तौ उभावपि तुल्य-बलाविव दृष्टौ ।

विक्रमव्यतिहारेण सामान्याऽभूद्द्वयोरपि ।
जयश्रीरन्तरा वेदिर्मत्तवारणयोरिव ॥ ॥९३ ॥

अर्थः– जयश्रीः = जयलक्ष्मीः विक्रमव्यतिहारेण = पराक्रमस्य पर्यायक्रमेण, द्वयोरपि – तयोः रामरावणयोः, अन्तरा – मध्ये, वेदिः – वेद्याकारा भित्तिः, मत्तवारणयोः इव = मत्तमातंगयोः इव, सामान्या = साधारणा, अभूत् ।

भावः– रामरावणयोर्युद्धं तादृगासीत् यदन्यतरस्य विजयनिश्चयः दुष्कारोऽभूत् ।

कृतप्रतिकृतप्रीतैस्तयोर्मुक्तां सुरासुरैः ।
परस्परशरव्राताः पुष्पवृष्टिं न सेहिरे ॥ ९४ ॥

अर्थः– कृतं =स्वकृतं, प्रतिकृतं – परकृतप्रतीकारः, ताभ्यां प्रीतैः, सुरासुरैः =देवदानवैः, तयोः –रामरावणयोः उपरि, मुक्तां, पुष्पवृष्टिः परस्परशरव्राताः – परस्परं प्रयुक्ताः शरपुञ्जाः, न सेहिरे – न सहन्ते स्म ।

भावः– उभाभ्यामपि रामरावणाभ्यां कृतप्रतिकृतैः देवदानवाः स्वस्वपक्षश्लाघनपुरस्सरं सन्तुष्टास्सन्तः पुष्पवृष्टिं अकुर्वन् । परं तु रामरावणप्रयुक्ताः शराः उभयैः सुरासुरैः सृष्टां पुष्पवृष्टिं परस्परं न्यवारयन्निव । अन्यतरजयाय उभावपि दृढसंकल्पाविति भावः ।

अयश्शङ्कुचितां रक्षः शतघ्नीमथ शत्रवे ।
हृतां वैवस्वतस्येव कूटशाल्मलिमक्षिपत् ॥ ९५ ॥

अर्थः– अथ, रक्षः=रावणः, अयश्शङ्कुचितां=अयसः कीलैः कीर्णां, शतघ्नीं – लोहकण्टककीलितं यष्टिविशेषं,

हृतां=विजयलब्धां, वैवस्वतस्य=यमस्य, कूटशाल्मलिमिव= एकमूलप्रकृतिः कण्टकी वृक्षविशेषः, तद्वत् विद्यमानतया यमस्य गदाया अपि सैव संज्ञा, तां इव, शत्रवे=राममुद्दिश्य, अक्षिपत् = क्षिप्तवान् ।

भावः– रावणः लोहकण्टककीलितं शतघ्नीनामकं आयुधविशेषं दिग्विजयकाले अपहृतां यमस्य गदामिव रामस्योपरि प्राक्षिपत् ।

राघवो रथमप्राप्तां तामाशां च सुरद्विषाम् ।
अर्धचन्द्रमुखैर्बाणैश्चिच्छेद कदलीसुखम् ।। ९६ ।।

अर्थः– राघवः, रथं अप्राप्तां=स्वरथपर्यन्तमनागतामेव, तां=शतघ्नीं, सुरद्विषां=रक्षसां, आशां = विजयतृष्णां च, अर्धचन्द्रमुखैः = अर्धचन्द्र इव मुखं येषां तैः, बाणैः, कदलीसुखं कदलीवत् सुखं यथातथा, चिच्छेद=छिन्नवान् ।

भावः– रामः रथं अप्राप्तामेव तां रावणप्रयुक्तां शतघ्नीं अर्धचन्द्रमुखैः बाणैः अच्छिनत् । एवं रक्षसां विजयाशाऽपि छिन्नाऽऽसीत् ।

अमोघं संदधे चास्मै धनुष्येकधनुर्धरः ।
ब्राह्ममस्त्रं प्रियाशोकशल्यनिष्कर्षणौषधम् ।। ९७ ।।

अर्थः– एकधनुर्धरः = अद्वितीयो धनुर्धरः राघवः, प्रियायाः = सीतायाः, शोक एव शल्यं, तस्य, उद्धारणे = निराकरणे, औषधं = औषधतुल्यम्, अमोघं = अवितथं,

ब्राह्मं - ब्रह्मदेवताकं, अस्त्रं - अभिमन्त्रितं बाणं, अस्मै = रावणाय, तद्वधाय, धनुषि=चापे, सन्दधे = योजयामास ।

भावः- रामः रावणवधाय कृतनिश्चयस्सन् सीता-शोकनिवारकं ब्रह्मास्त्रं प्रायुङ्क्त ।

तद्व्योम्नि शतधा भिन्नं ददृशो दीप्तिमन्मुखम् ।
वपुर्महोरगस्येव करालफणमण्डलम् ।। ९८ ।।

अर्थः- व्योम्नि = आकाशे, शतधा = बहुप्रकारेण, भिन्नं=प्रसृतं, दीप्तिमन्मुखं = दीप्तिमन्ति मुखानि यस्य तत्तथाविधं, तत् = ब्रह्मास्त्रं, करालफणमण्डलं = करालं भीषणं फणमण्डलं यस्य तत्तथोक्तं, महोरगस्य = शेषस्य, वपुरिव = काय इव, ददृशे - दृष्टम् ।

भावः- रावणवधाय रामेण प्रयुक्तं ब्रह्मास्त्रं गगने प्रसृतं, महोज्ज्वलं च सत् महाहेर्वपुरिव दृश्यते स्म ।

तेन मन्त्रप्रयुक्तेन निमेषार्धादपातयत् ।
स रावणशिरःपङ्क्तिमज्ञातव्रणवेदनाम् ।। ९९ ।।

अर्थः- सः - रामः, मन्त्रप्रयुक्तेन=अभिमन्त्र्यविसृष्टेन, तेन= अस्त्रेण, अज्ञातव्रणवेदनां=अतिशैघ्र्यात् अननुभूतव्रणदुःखां, रावणशिरःपङ्क्तिं - रावणस्य शिरश्श्रेणीं, निमेषार्धात् - अर्धनिमेषे, अपातयत् - पातयामास ।

भावः- रामो ब्रह्मास्त्रेण निमेषार्धेन हननव्यथाशून्यं यथा तथा रावणशिरःपङ्क्तिं पातयामास ।

बालार्कप्रतिमेवाप्सु वीचिभिन्ना पतिष्यतः ।
रराज रक्षःकायस्य कण्ठच्छेदपरम्परा ॥ १०० ॥

अर्थः- पतिष्यतः = आसन्नपातस्य, रक्षःकायस्य = रावणकलेबरस्य, कण्ठच्छेदपरम्परा = खंडितकंठानां पङ्क्तिः, वीचिभिः=तरङ्गैः, भिन्ना = नानाकृता, अप्सु= जले, बालार्कप्रतिमा इव = उदयकालीनसूर्यस्य प्रतिबिम्बं इव, रराज = व्यराजत ।

भाव.- रामेण ब्रह्मास्त्रेण छिन्ना रावणस्य शिरस्संस्थानव्रणपङ्क्तिः तरङ्गिते जले नाना दृश्यमानं उदयकालीनसूर्यप्रतिबिम्बं अनुकृतवती ।

मरुतां पश्यतां तस्य शिरांसि पतितान्यपि ।
मनो नाऽतिविशश्वास पुनःसन्धानशङ्किनाम् ॥१०१ ॥

अर्थः- पतितानि, तस्य=रावणस्य, शिरांसि, पश्यतामपि = साक्षात्कुर्वतामपि, पुनस्सन्धानशङ्किनां = पुनस्सन्धानं भवेदिति शङ्कमानानां, मरुतां = देवानां मरुद्गणानां वा, मनः = चित्तं, न अतिविशश्वास = अतिविश्वासं न प्राप ।

भावः- रामेण पातितापि रावणस्य शिरांसि पुनः स्वस्वग्रीवासन्धानं प्राप्नुयुरिति सन्दिहानानां देवानां मनः रावणवधे विस्रम्भं न प्राप ।

अथ मदगुरुपक्षैर्लोकपालद्विपाना-
मनुगतमलिबृन्दैर्गण्डभित्तीर्विहाय ।
उपनतमणिबन्धे मूर्ध्नि पौलस्त्यशत्रोः
सुरभि सुरविमुक्तं पुष्पवर्षं पपात ॥ १०२ ॥

अर्थः— अर्थः - रावणवधानन्तरं, मदगुरुपक्षैः=गजगण्डसंचारसंक्रान्तेन मदजलेन भारायमाणपक्षैः, अलिवृन्दैः = भ्रमरसमूहैः, लोकपालद्विपानां - ऐरावतादीनां गगनचारिणां, गण्डभित्तीः - कुड्यवत् स्थितानि गण्डस्थलानि, विहाय=त्यक्त्वा, अनुगतं-अनुसृतं, सुरभि-सुगन्धि, सुरविमुक्तं-देवैर्वृष्टं, पुष्पवर्षं-कुसुमवर्षं, उपनतमणिबन्धे-उपनतः - आसन्नः मणिबन्धः (राज्याभिषेकसमये भावी) यस्य सः तस्मिन्, पौलस्त्यशत्रोः - पौलस्त्यस्य रावणस्य शत्रोः रामस्य, मूर्ध्नि =शिरसि, पपात ।

भावः— रामरावणयुद्धं द्रष्टुं स्वस्वगजानधिरुह्य गगने स्थिताः देवाः रावणवधानन्तरं पुष्पवृष्टिं अकुर्वन् । गजानां गण्डस्थलेषु मदजलास्वादनाय चरन्तो भ्रमरसमूहाः देवैरुत्सृष्टं पुष्पवर्षं अनुजग्मुः । भ्रमरानुगतानि पुष्पाणि रामस्य शिरसि विपतितानि । तत् रामस्य राज्याभिषेकसमये भविष्यन्तं मणिबन्धं ज्ञापयदिव आसीत्

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यन्ता हरेः सपदि संहृतकार्मुकज्य-
माप्रच्छ्य राघवमनुष्ठितदेवकार्यम् ।
नामाङ्करावणशराङ्कितकेतुयष्टि-
मूर्ध्वं रथं हरिसहस्रयुजं निनाय ॥ १०३ ॥

अर्थः– हरेः = इन्द्रस्य, यन्ता = सारथिः मातलिः, सपदि=सद्य एव, संहृतकार्मुकज्यं - उपसंहृतशरासनगुणं, युद्धस्य समाप्तत्वात् धनुर्गुणं शिथिलीकृतवन्तं, अनुष्ठित-देवकार्यं=रावणवधरूपं देवकार्यं कृतवन्तं, राघवं, आपृ-च्छ्य - ('साधयामि' इति) आमन्त्र्य, नामाङ्करावण-शराङ्कितकेतुयष्टिं=नामाक्षरचिह्नैः रावणशरैः चिह्नितो-ध्वजदण्डः यस्य तथाभूतं, हरिसहस्रयुजं - अश्वसहस्रयुतं, रथं, ऊर्ध्वं, निनाय - नीतवान् ।

भावः– इन्द्रसारथिः मातलिः रावणवधेन कृतकृत्यं रामं आमन्त्र्य रथं स्वर्गं नीतवान् ।

★ रघुपतिरपि जातवेदोविशुद्धां प्रगृह्य प्रियां
प्रियसुहृदि विभीषणे संगमय्य श्रियं वैरिणः ।
रविसुतसहितेन तेनाऽनुयातः ससौमित्रिणा
भुजविजितविमानरत्नाधिरूढः प्रतस्थे पुरीम् ॥१०४॥

अर्थः– रघुपतिरपि, जातवेदोविशुद्धां - अग्निशुद्धां, प्रियां - सीतां, प्रगृह्य - स्वीकृत्य, प्रियसुहृदि=विभीषणे,

वैरिणः = रावणस्य, श्रियं=राज्यलक्ष्मीं, संगमय्य=संङ्गतां कृत्वा, रविसुतसहितेन = सुग्रीवयुतेन, ससौमित्रिणा = सलक्ष्मणेन, तेन = विभीषणेन, अनुयातः = अनुगतः सन्, भुजविजितविमानरत्नाधिरूढः =भुजबलेन आर्जितं पुष्पक-नामकं विमानरत्नं अधिरूढश्च सन्, पुरीं = अयोध्यां, प्रतस्थे = प्रस्थितवान् ।

भावः- रघूत्तमः श्रीरामः सर्वेषां समक्षं अग्निपरी-क्षितां सीतां प्रतिगृह्य, विभीषणं लङ्काराज्ये अभिषिच्य, तेन सुग्रीवादिभिश्च अनुगम्यमानस्सन्, लक्ष्मणेन सह युद्ध-जितं विमानरत्नं पुष्पकमधिरुह्य अयोध्यापुरीं प्रस्थितः ।

सर्वं श्रीकृष्णार्पणमस्तु ।



# प्रश्नावलिः

—oOo—

श्लोकसंख्या

१. दशरथः कथमासीत् ? १-३

२. स किं कृतवान् ? ,,

३ 'रामे श्रीर्न्यस्यतामिति' केन कस्मै कथं कथितम् ? २

४. रामस्य अभिषेकसंभारः केन कथं दूषितः ? ४

५. कैकेयीप्रार्थितौ वरौ कौ कीदृशौ च आस्ताम् ? ५

६. रामः पित्रा दत्तां महीं रुदन्, वनं गच्छेति तदाज्ञां मुदितश्च अग्रहीत् – किं कारणम् ? ७

७. राज्याभिषेकस्य वनवासस्य च प्रसंगे रामः कीदृश आसीत् ? ८

८. 'स्मृत्वा शापं स्वकर्मजं' – कोऽयं शापः ? अत्राभिसंहिता पूर्वगाथा विशदयत । १०

९. 'द्विषां आमिषतां ययौ' – किं ? कुतः ? ११

१०. भरतः न केवलं मातुः, अपि तु स्वस्याः श्रियोऽपि विमुखोऽभवत् – कुतः ? १३

११. 'परिवेत्तारं आत्मानं मेने' कः? कोऽस्य भावः ? १६

१२. भरतः रामं पादुके किमर्थं ययाचे ? १७

१३. भरतः कथं राज्यं अपालयत् ? १८

१४. ऐन्द्रिः कः ? स कीदृशमपराधं कृतवान् ? रामस्तं कथमदण्डयत् ? २२-२३

१५. रामः चित्रकूटं परित्यज्य अन्यत्र कुतो गतवान्? २४

१६. दक्षिणां दिशं गच्छन्तं राममनुगच्छन्ती सीता कथं बभौ ? २६

१७. पञ्चवटीवृत्तान्तः कः ? ३२

१८. 'अत्यारूढो हि नारीणां अकालज्ञो मनोभवः' ससन्दर्भं विवृणुत । ३३

१९. 'वृषस्यन्तीं वृषस्कन्धः' किमिति शशास ? ३४

२०. रामात् लक्ष्मणं, तस्माच्च रामं प्रति गतागतं कुर्वती शूर्पणखा कथमासीत् ? ३५

२१. शूर्पणखा स्वनाम्नः सदृशं रूपं प्रत्यपद्यत - किं कारणं ? ३६-३७.३८

२२. लक्ष्मणेन विरूपिता शूर्पणखा कथं प्रत्यकरोत्? ४२

२३. 'तेषां तदेवाभूदमङ्गलम्' ते के ? किं तत् ? कथममङ्गलम् ? ४३

२४. 'ते तु यावन्त एवाजौ तावांश्च ददृशे स तैः' ससन्दर्भं विशदयत । ४५

२५. रामस्य खरदूषणादिभिर्युद्धं वर्णयत ।

४४ तः ५० पर्यन्तं

दूरध्वनि संकेत: "संस्कृतम्"

# गैर्वाणी

मासिकी पत्रिका

बालानां प्रौढानां मनोविनोदकरी
संस्कृतभाषायां निराघाटवचनरचनापाटवप्रदायिनी च ।

वार्षिकम् १५·००

परिचयाभिज्ञविचक्षणसमर्थपरीक्षा पाठ्यपुस्तकानि
चत्वारि वाचकानि (I — IV Readers) च
अत्र लभ्येरन् ।

प्राप्तिस्थानम् –

कार्यदर्शी,
संस्कृतभाषाप्रचारिणी सभा, चित्तूरु· (आ. प्र.)



विजय प्रेस्, चित्तूरु·